# ॥ आञ्जनेय गायत्रि , ध्यानं , त्रिकाल वंदनं ॥

श्री आञ्जनेय स्वामी परदेवताभ्यो नमः

ध्यानम्

उद्यदादित्य संकाशं उदार भुज विक्रमम् ।

कन्दर्प कोटि लावण्यं सर्व विद्या विशारदम् ॥

श्री राम हृदयानंदं भक्त कल्प महीरुहम् ।

अभयं वरदं दोर्भ्यां कलये मारुतात्मजम् ॥

अञ्जनानन्दनं वीरं जानकी शोकनाशनम् ।

कपीशं अक्षहन्तारं वन्दे लंका भयंकरम् ॥

आञ्जनेयं अतिपाटलाननं कञ्चनाद्रि कमनीय विग्रहम् ।

पारिजात तरुमूल वासिनं भावयामि पवमान नन्दनम् ॥

उल्लंघ्य सिन्धोः सलिलं सलीलं यस्शोक वह्निं जनकात्मजाय ।

आदाय तेनैव ददाह् लंकां नमामि तं प्रान्जलिराञ्जनेयं ॥

अतुलित बलधामं स्वर्ण शैलाभदेहम्

दनुजवन कृशानं ज्ञानिनां अग्रगण्यम् ।

सकल गुण निधानं वानराणां अधीशम्

रघुपति प्रिय भक्तं वात जातं नमामि ॥

गोश्पदीकृत वारशिं मशकीकृत राक्षसाम् ।

रामायण महामाला रत्नं वन्दे अनिलात्मजम् ॥

यत्र यत्र रघुनाथ कीर्तनं तत्र तत्र कृत मस्तकाञ्जलिम् ।

भाश्पवारि परिपूर्ण लोचनं मारुतिं नमत राक्षसान्तकम् ॥

अमिषीकृत मार्तंदं गोश्पदीकृत सागरम् ।

तृणीकृत दशग्रीवं आञ्जनेयं नमाम्यहम् ॥

मनोजवं मारुत तुल्य वेगं

जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।

वातात्मजं वानर यूथ मुख्यं

श्री रामदूतं शिरसा नमामि ॥

आञ्जनेय गायत्रि

ॐ आञ्जनेयाय विद्महे वायुपुत्राय धीमहि ।

तन्नो हनुमत् प्रचोदयात् ॥

आञ्जनेय त्रिकाल वंदनं

प्रातः स्मरामि हनुमन् अनन्तवीर्यं
श्री रामचन्द्र चरणाम्बुज चंचरीकम् ।
लंकापुरीदहन नन्दितदेववृन्दं
सर्वार्थसिद्धिसदनं प्रथितप्रभावम् ॥

माध्यम् नमामि वृजिनार्णव तारणैकाधारं
शरण्य मुदितानुपम प्रभावम् ।
सीताधि सिंधु परिशोषण कर्म दक्षं
वंदारु कल्पतरुं अव्ययं आञ्नेयम् ॥

सायं भजामि शरणोप स्मृताखिलार्ति
पुञ्ज प्रणाशन विधौ प्रथित प्रतापम् ।
अक्षांतकं सकल राक्षस वंश
धूम केतुं प्रमोदित विदेह सुतं दयालुम् ॥